क्तःशुभांल्लोकान्प्राप्नुयात्पुण्यकर्मणां ॥ ७१ ॥

अन्वयः

यः नरः श्रद्धावान् च अनसूयः सन् शृणुयात् अपि सः अपि मुक्तः सन् पुण्यकर्मणां शुभान् लोकान् प्राप्नुयात्॥ ७१॥

टीका.

जो मनुष्य श्रद्धासंयुक्त औ निंदारहित व्हैके केवल श्रवण ही करैगा सोभी संसारबंधसे मुक्त व्हैके जो पुण्यकर्म करनेवाले याने मेरे भक्तौंकेलोकौंको प्राप्त होयगा ॥ ७१ ॥

मूलम्.

कच्चिदेतच्छ्रुतंपार्थत्वयैकाग्रेणचेतसा ॥ कच्चिदज्ञानसंमोहःप्रणष्टस्तेधनंजय ॥ ७२ ॥

अन्वयः

हेपार्थ कच्चित् एतत् एकाग्रचेतसा श्रुतं किं हेधनंजय कच्चित् ते अज्ञानसंमोहः प्रणष्टः ॥ ७२ ॥

टीका.

भगवान पूछते हैं कि हे पार्थ जो मैंने कहा सो क्या तुमने एकाग्रचित्तकरिके सुनाया नही जो सुना तौ हेधनंजय क्या तुह्मारा अज्ञानसे उत्पन्नभयामोह नष्टभया कि कैसासो कहौ ॥ ७२॥

मूलम्.

अर्जुनउवाच ॥ नष्टोमोहःस्मृतिर्लब्धात्वत्प्रसादान्मयाऽच्युत ॥ स्थितोस्मिगतसंदेहःकरिष्येवचनंतव ॥ ७३ ॥

अर्जुनः उवाच हेअच्युत त्वत्प्रसादात् मोहः नष्टः मया

स्मृतिः लब्धा इदानीं गतसंदेहः स्थितः अस्मि अतः तव वचनं करिष्ये ॥ ७३ ॥

टीका.

अर्जुन कहते हैं कि हे अच्युत तुह्मारी कृपासे मोह नष्ट भया औ मैं स्मृतिको प्राप्त भया अब संदेहरहित स्थित हौं इसवास्ते आपका वचन याने स्वधर्मरूप युद्ध करौंगा ॥ ७३ ॥

मूलम्.

संजयउवाच ॥ इत्यहंवासुदेवस्यपार्थस्यचमहा त्मनः ॥ संवादमिममश्रौषमद्भुतंरोमहर्षणं ॥ ७४ ॥

अन्वयः

संजयः उवाच अहं वासुदेवस्य च महात्मनः पार्थस्य इति इमं अद्भुतं रोमहर्षणम् संवादं अश्रौषं ॥ ७४ ॥

टीका.

यह सब सुनिके संजय धृतराष्ट्रको कहते हैं कि हेमहाराज मैं वसुदेवके पुत्र कृष्णका औ महात्मा याने प्रसन्न है मन जिसका ऐसा पृथाके पुत्र अर्जुनका यतना यह अद्भुत रोमांचकारक संवाद सुनता भया ॥ ७४ ॥

मूलम्.

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहंपरं ॥ योगयो गेश्वरात्कृष्णात्साक्षात्कथयतःस्वयं ॥ ७५ ॥

अन्वयः

स्वयं कथयतः साक्षात् योगेश्वरात् कृष्णात् एतत् परं गुह्यं योगं व्यासप्रसादात् अहं श्रुतवान् अस्मि ॥ ७५ ॥

टीका.

आपही कहि रहे ऐसे साक्षात् योगेश्वर श्रीकृष्णभगवानसे

इसपरमगोप्ययोगको श्रीव्यासजीकेअनुग्रहसेसुनताभया॥७५

मूलम्.

राजन्संस्मृत्यसंस्मृत्यसंवादमिममद्भुतं ॥ केश
वार्जुनयोःपुण्यंहृष्यामिचमुहुर्मुहुः ॥७६ ॥तच्च
संस्मृत्यसंस्मृत्यरूपमत्यद्भुतंहरेः ॥ विस्मयोमे
महान्राजन्हृष्यामिचपुनःपुनः ॥ ७७ ॥

अन्वयः

हेराजन् केशवार्जुनयोः इमं अद्भुतं पुण्यं संवादं संस्मृ
त्य संस्मृत्य मुहुः मुहुः हृष्यामि ॥ ७६ ॥ च हेराजन्
तत् अत्यद्भुतं हरेः रूपं संस्मृत्य संस्मृत्य मे महान् वि
स्मयः जायते च पुनः पुनः हृष्यामि ॥ ७७ ॥

टीका.

हेराजन् श्रीकृष्ण औ अर्जुनके इस अद्भुत पुण्यदायक संवादको स्मरण करिकरिके वारंवार हर्षको प्राप्त होता हौं ॥ ७६ ॥ हेराजन् वह भगवानका अतिअद्भुतरूप उसको स्मरण करिकरिके मेरेको बडा विस्मय होता है औ वारंवार हर्षित होता हौं ॥ ७७ ॥

मूलम्.

यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः॥ तत्रश्री
र्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ॥ ७८ ॥

अन्वयः

यत्र योगेश्वरः कृष्णः यत्र धनुर्धरः पार्थः तत्र श्रीः वि
जयः भूतिः ध्रुवानीतिः इति मम मतिः ॥ ७८ ॥

टीका.

जहां योगेश्वर कृष्ण औ जहां धनुषके धरनेवाले अर्जुन हैं तहांही अचलसंपत्ति औ अचलविजय अचलऐश्वर्य औ अचल

नीति है ऐसा मेरेको निश्चय होता है ॥ ७८ ॥

कान्यकुब्जद्विजोत्तंसोभरद्वाजान्वयाब्धिजः* ॥ बभूवसुकलोनाम्नाबालाशर्मेतिविश्रुतः ॥ तद्वंशवर्द्धनःप्राज्ञोजातोगोवर्द्धनाऽभिधः ॥ तापीरामःसुतस्तस्यतस्याथंस्तनुजास्त्रयः ॥ सीतारामश्चदत्तश्चमोतीरामइतिक्रमात् ॥ सीतारामात्मजेनेयंगीतावाक्यार्थबोधिनी ॥ रघुनाथप्रसादेनमयाव्याख्याकृताजनाः ॥ हरिभक्तिरसास्वादरसिकाअनुमोदत ॥ वसुवन्ह्यंकभूसंख्येविक्रमार्कगताब्दके ॥ मार्गशीर्षेदलेकृष्णेह्यष्टम्यांगुरुवासरे ॥ इयंसंपूर्णतांयातागुरोर्मेऽनुग्रहात्किल ॥श्रीश्रीनिवासतातार्यमुनेःश्रीरंगवासिनः ॥ यत्कृतेऽस्याःफलंभूयात्तन्मयापादपद्मयोः ॥ गीताचार्यस्यकृष्णस्यसीतानाथस्यचार्पितं ॥ इतिश्रीमद्भगवद्गीता सूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेमोक्षसंन्यासयोगोनामाष्टादशोऽध्यायः॥ १८॥इति श्रीमत्सुकलसीतारामात्मजपंडितरघुनाथप्रसादकृतायांश्रीमद्भगवद्गीतावाक्यार्थबोधिनीभाषाटीकायामष्टादशोध्यायः ॥ १८ ॥ ॥ ६ ॥ ॥

हरसेटसुतोबापूख्यातोयंत्रालयाधिपः ॥ रघुनाथश्चबाबाख्यस्तत्सुताविति विश्रुतौ ॥१॥ व्याख्येयंरचिताताभ्यांप्रार्थितेनमयाकिल ॥ रघुनाथप्रसादेनताभ्यामेवविमुद्रिता ॥ २॥ स्वीयेयंत्रालयेरम्येमुंबयांशिसकाक्षरैः ॥ प्राप्तानन्याऽधिकाराभ्यांव्याख्याकर्तुःसकाशतः ॥ ३ ॥

*चंद्र

